'हज्ज' करने से पूर्व हर व्यक्ति को उसकी शर्तों को पूर्ण करना होता है। जैसे—(1) सच्ची निय्यत, (2) तौहीद के अक़ीदा की तजदीद (नवीनीकरण), (3) सच्ची तौबा, (4) लेन-देन की सफाई तथा (5) हज्ज की यात्रा के लिए पूरी सामग्री एकत्र करना।

ये उपर्युक्त पाँच 'धर्म-स्तम्भ' (आस्था, नमाज़, रोज़ा, ज़कात और हज्ज) हैं, जिस पर 'इस्लाम-धर्म' पूर्ण होता है।

इस्लामिक आदेश व निर्देश पूर्णतः प्राकृतिक और विश्वकल्याणकारी हैं, इसलिए इस धर्म के अनुयायियों पर ये दोनों प्रतिक्षण एवं सर्वत्र लागू रहते हैं। इनको सीमित करना एवं क्रमबद्ध लिखना या एकत्र करना अत्यधिक कठिन कार्य है। मनुष्य के लिए यह आदेश और निर्देश आवश्यकतानुसार सुलभ हैं।

इस धर्म के पवित्र ग्रन्थ (मूलस्रोत) (1) क़ुरआन तथा (2) हदीस हैं।

'क़ुरआन' ईश्वरीय ग्रन्थ माना जाता है और 'हदीस' में मुहम्मद साहब के पवित्र उपदेश हैं, जो उन्होंने समय-समय पर दिये हैं[1]।

●

1. सर्व-धर्म-कोश, सं०-डॉ० रामसरूप 'रसिकेश', चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, पृ० 52

**आदर्श प्रतियाँ—**

क. वसुधारानामधारणीसूत्र

एशियाटिक सोसायटी, कलकत्ता, सं०–4836, No. 43, पूर्ण।

ख. वसुधाराधारणीसूत्र,

एशियाटिक सोसायटी, कलकत्ता, सं० 10757–II, No. 45, अपूर्ण।

ग. वसुधाराधारणीसूत्र,

एशियाटिक सोसायटी, कलकत्ता, सं० 10757–I, No. 44, अपूर्ण।

भो० འཕགས་པ་ནོར་རྒྱུན་ཅེས་བྱ་བའི་གཟུངས། (तो० 662)

# आर्यवसुधाराधारणीसूत्र

ॐ नमो भगवत्यै आर्यश्रीवसुधारायै।

एवं मया श्रुतमेकस्मिन् समये भगवान् कोशाम्ब्यां महानगर्यां विहरति स्म। कण्टकसंज्ञके महावनवरे घोषिरालामे(तारामे) महता भिक्षुसंघेन सार्द्धं पञ्चमात्रैर्भिक्षुशतैः संबहुलैश्च श्रावकैरसंख्ययैश्च[1] बोधिसत्त्वैः महासत्त्वैः सर्वबुद्धगुणसमन्वागतैः। *तत्र खलु भगवांस्तस्यामेव पर्षदि तैरेव परिवृतः पुरस्कृतः सर्वद्रारिद्र्यव्याधिदुःखार्णवपरिशोषणं नाम धर्मपर्यायं देशयति स्म। आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणं स्वर्थं सुव्यञ्जनं केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यं संप्रकाशयति स्म।*

तेन खलु पुनः समयेन कोशाम्ब्यां महानगर्यां सुचन्द्रो नाम गृहपतिः प्रतिवसति स्म। उपशान्तेन्द्रियोपशान्तमानसो बहुपुत्रो बहुदुहितरो बहुभृत्यजनसम्पन्नः श्राद्धो महाश्राद्धः। तेन खलु पुनः समयेन [येन] भगवांस्तेनोपसङ्क्रान्त उपसङ्क्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तमनेकशतसहस्रं प्रदक्षिणीकृत्य एकान्ते न्यषीदत्। एकान्ते निषण्णः सुचन्द्रो नाम गृहपतिर्भगवन्तमेतदवोचत्। पृच्छेयमहं भगवन्तं तथागतं[2] सम्यक्सम्बुद्धं किञ्चिदेव प्रदेशं स चेन्मे भगवानवकाशं कुर्यात् पृष्ठप्रश्नव्याकरणाय। एवमुक्ते भगवान् सुचन्द्रगृहपतिमेतदवोचत्। पृच्छ त्वं गृहपते यद्यदेवाकांक्षस्यन्ते तत्र प्रश्नव्याकरणेन चित्तमाराधयिष्ये। एवमुक्ते सुचन्द्रो गृहपतिः साधु भगवन्निति भगवतो वचनं प्रतिश्रुत्य भगवन्तमेतदवोचत्। कथं भगवन् कुलपुत्रो वा कुलदुहिता वा दरिद्रो भूत्वा अदरिद्रो भवति। व्याधितश्च भूत्वा[3] अव्याधितो भवति। अथ खलु भगवान् जानन्नेव सुचन्द्रं गृहपतिमेतदवोचत्। किमिति त्वं गृहपते दरिद्रतायाः परिप्रश्नं पृच्छसि?

एवमुक्ते सुचन्द्रो गृहपति भगवन्तमेतदवोचत्। दरिद्रोऽहं भगवन् दरिद्रोऽहं सुगत बहुपोषो बहुपुत्रो बहुदुहितृको बहुभृत्यपरिजनसम्पन्नः तद्देशयतु भगवान् धर्मपर्यायं येन दरिद्रसत्त्वा अदरिद्रा भवेयुः। व्याधिताश्च सत्त्वा अव्याधिता भवेयुः। बहुधनधान्यकोश-कोष्ठागारसम्पन्नाश्च भवेयुः। प्रिया मनापाः परममनोज्ञाः दर्शनीयाश्च भवेयुः। दानपतयो

---

1. 'श्रावकैरसंख्ययैश्च' - नास्ति-भो०

*-*. ''तत्र खलु........स्म'' नास्ति-भो०

2. तथागतमर्हन्तं-भो०

3. सत्त्वा-क.

महादानपतयश्च अक्षीणहिरण्यसुवर्णधनधान्यकोशकोष्ठागाराश्च भवेयुः। मणिमुक्तिवज्र-वैडूर्यशङ्खशिलाप्रवालजातरूपरजतमरकतपद्मरागसमृद्धाश्च भवेयुः। सुप्रतिष्ठितगृहपुत्रदार-कुटुम्बाश्च भवेयुः। गृहपतिभार्यापुत्रदारकदारिकादासिकर्मकरप्रेस(ष)कजनसम्पन्नपरिवाराश्च भवेयुः।

एवमुक्ते भगवान् सर्वाशापरिपूरकेन ब्रह्मस्वरेण सुचन्द्रं गृहपतिमेतदवोचत्। अस्ति गृहपते भूतपूर्वमतीतेऽध्वन्यसंख्येयेषु कल्पेषु यदासीत्तेन कालेन तेन समयेन भगवान्[1] श्रीवज्रधरसागरनिर्घोषो नाम तथागतोऽर्हत्सम्यक्सम्बुद्धो लोक उत्पादितविद्याचरणसम्पन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान्, तस्य तथागतस्यान्तिके मया गृहपुत्रैः(पते) वसुधारा नाम धारणीश्रुता। श्रुत्वा च उद्गृहीता धारिता वाचिता देशिता पर्यवाप्ता। अनुमोदिता परेभ्यश्च विस्तरेण सम्प्रकाशिता। अहमप्येतर्हि ते कुलपुत्र तान् धारणीं तथा भाषिष्ये। यथा अस्या धारण्याः प्रभावेण कुलपुत्र मनुषा न विहेठयन्ति। अमानुषा न विहेठयन्ति। देवा न विहेठयन्ति। *नागा न विहेठयन्ति। यक्षा न विहेठयन्ति। असुरा न विहेठयन्ति। राक्षसा न विहेठयन्ति। भूता न विहेठयन्ति*। प्रेता न विहेठयन्ति। पिशाचा न विहेठयन्ति। कुम्भाण्डा न विहेठयन्ति। ओस्तार(ड)का न विहेठयन्ति। अपस्मारा न विहेठयन्ति। गन्धर्वा न विहेठयन्ति। किन्नरा न विहेठयन्ति। महोरगा न विहेठयन्ति। पूतना न विहेठयन्ति। कटपूतना न विहेठयन्ति। सर्वग्रहा न विहेठयन्ति। सर्वदेवा न विहेठयन्ति। क्षुत्पिपासा न विहेठयन्ति। सर्वाहारा न विहेठयन्ति। एवं यावत् पुष्पाहाराः फलाहाराः पत्राहाराः त्वचाहाराः स्कन्धाहाराः मूलाहाराः गन्धाहाराः धूपाहाराः दीपाहाराः माल्या(ला)हाराः आहुत्याहाराः न विहेठयन्ति। ओजोहाराः स्वेदाहाराः रसाहाराः रक्ताहाराः मांसाहाराः मेदाहाराः अस्थ्याहाराः मज्जाहाराः रुधिराहाराः शुक्राहाराः जीविताहाराः सर्वे न विहेठयन्ति। एवं यावद्विष्ठाहाराः मूत्राहाराः खेटाहाराः सिंघाणकाहाराः क्लेदाहाराः श्लेष्माहाराः उच्छिष्टाहाराः अनुच्छिष्टाहाराः उच्छिष्टाहाराः न विहेठयन्ति। शस्याहाराः गर्भाहाराः सर्वे न विहेठयन्ति। सर्वे डाकिन्यो न विहेठयन्ति। छाया न विहेठयन्ति। जाता न विहेठयन्ति। भावनाहाराः न विहेठयन्ति। रूपाहाराः शब्दाहाराः गन्धाहाराः रसाहाराः स्पर्शाहाराः आहुत्याहाराः नानारूपाहाराः

---

1. 'भगवान्' नास्ति-क.

*-*. 'नागा न......भूता न विहेठयन्ति' नास्ति-भो०

विरूपाहारा: अनन्तरूपाहारा: कामरूपाहारा: विचित्ररूपाहारा: बलाहारा: बल्याहारा: अशुच्याहारा: विचित्राहारा: यावदुच्छिष्टाहारा: न विहेठयन्ति। यावत् खेचरा: भूचरा: अन्तरीक्षचरा: जलचरा: स्थलचरा: सर्वे न विहेठयन्ति। एतेषां मम सर्वसत्त्वानां महावज्रेण मूर्ध्निस्फालनाय स्फोटनाय प्रहरणाय हूँ 2 फट् वज्रेण सर्वदुष्टान् सर्वशत्रून् मारय 2 शोषय 2 स्तम्भय 2 बन्धय 2 हन 2 दह 2 पच 2 मर 2 मारय 2 सर्वशत्रून् नाशय 2 हूँ फट् स्वाहा। यस्य च[1] कुलपुत्र[2] इयं सा[3] गृहपते वसुधारा नाम धारणी श्राद्धस्य कुलपुत्रस्य वा कुलदुहितुर्वा हृदयगता गृहगता हस्तगता पुस्तकगता श्रुतिमात्रगता पर्यवाप्ता मनसा सुपरिचिन्तिता धारिता वाचिता लिखिता अनुमोदिता परेभ्यश्च विस्तरेण सम्प्रकाशिता च तद् भविष्यति। तस्य कुलपुत्रस्य वा कुलदुहितुर्वा दीर्घरात्रमर्थाय हिताय सुखाय क्षेमाय[4] सुभिक्षाय योगसम्भाराय भविष्यति। यश्चेमां वसुधारा नाम धारणीं तथागतेभ्योऽर्हद्भ्य: सम्यक्सम्बुद्धेभ्य उदारां पूजां कृत्वा नमस्कृत्वा आवर्तयेत्। सर्वतथागतानां सर्वश्रावक-प्रत्येकबुद्धानां सर्वबोधिसत्त्वानां सर्वतथागतसर्वमुद्रामन्त्रविद्यादेवतानां तेभ्य: सर्वपूजाभि-पूजयेत्। अर्धरात्रे त्रिचतुर्वाराणि तस्य देवता आत्तमनस्था[5] प्रमुदित: प्रीतिसौमनस्यजातो वाचयेत्। तदा भगवत्या वसुधारया[6] स्वयमेवागत्य धनधान्यहिरण्यवृष्टिं पातयिष्यति। प्रीत्या तथागतशासने, प्रीत्या बुद्धप्रज्ञप्त्या, प्रीत्या धर्मप्रज्ञप्त्या, प्रीत्या सङ्घप्रज्ञप्त्या, प्रीत्या सर्वश्रावक-प्रत्येकबुद्धप्रज्ञप्त्या, प्रीत्या पञ्चकुलावस्थितमुद्रामन्त्रविद्यादेवता प्रज्ञप्त्या, प्रीत्या धर्मभाण-कस्याशयेन।

नमो रत्नत्रयाय। ॐ नमो भगवत्यै आर्यवसु[7]धारायै। ॐ भगवते श्रीवज्रधर-सागरनिर्घोषाय तथागतायार्हते सम्यक्सम्बुद्धाय। ॐ नमो भगवतेऽक्षोभ्याय तथागतायार्हते सम्यक्सम्बुद्धाय। ॐ नम: सर्वतथागतायार्हते सम्यक्सम्बुद्धाय। नम: सर्वतथागतेभ्योऽतीता-नागतप्रत्युत्पन्नेभ्य:। नम: क्षेमङ्करस्य[8] तथागतस्य नमो वज्रधरसागरगम्भीरस्य तथागतस्य।

---

1. तु-ग.
2. 'कुलपुत्र' नास्ति-ग.
3. 'सा' नास्ति-ग.
4. 'क्षेमाय' नास्ति-क.ख.
5. ०स्था:-ग.
6. ०धारया:-क.ख.
7. आर्यश्रीवसु०-क.ख.
8. क्षेमकरस्य-ग.

अग्रयुगप्राप्तेभ्यो भद्रयुगप्राप्तेभ्यो विपश्यादिभ्यः शाक्यमुनिभ्यो[1] दानपारमितापरिपूर्णेभ्यो भगवद्भ्यः विपश्यिनस्तेजसा। ऋद्ध्या च शिखिनस्तथा विश्वभुक्प्रज्ञया चैव। क्रकुच्छन्दबलेन च कनकमुनेः शिक्षायाम्। काश्यपस्य गुणैरपि शाक्यसिंहस्य वीर्येण। मैत्रेयस्य प्रतिज्ञया समृद्ध्यन्तु मे तथागतस्य[2] इमे मन्त्रपदाः। सर्वसत्त्वहितो विद्या दारिद्र्यः व्याधिदुःख-व्यसनार्णवमोचकेभ्यः। इयं वसुधारानामधारणी विद्यारहस्यं प्रवक्ष्यामि। तथागत-भाषितस्यार्थमन्त्रपदान्यनुस्मरामि। तद्यथा—ॐ क्षुँ हूँ ॐ श्रीधने 2 धनैश्वर्ये शुक्रमाणे(?) अक्षयकोशे चिन्तितोत्पादनि मनसि साधनि। मनो इच्छा साधनि। साधनकरि। कोटे 2 कोटावरे कोटीश्वर्ये अनन्तापर्यन्तसर्वरत्नवस्त्रालङ्काराभरणानि धनधान्यवृद्धिंकरि चिन्तितोत्पत्ति समोहनि। शक्रस्य कोशकोष्ठागारदोहनि। बृहस्पतेर्मन्त्रमपहरणि। बुद्धे 2 बुद्धसत्ये धर्मसत्ये सङ्घसत्ये सर्वबुद्धबोधिसत्त्वसत्ये, बोधिप्राग्भारसत्ये, सर्वश्रावकप्रत्येकबुद्धसत्ये, ब्रह्मसत्ये, विष्णुसत्ये, रुद्रसत्ये, लोकपालसत्ये, धनदाज्ञाकरि हिरण्यसुवर्णमणिमुक्तिवज्रवैडूर्यशङ्ख-शिलाप्रवालजातरूपरजतमरकतपद्मरागइन्द्रनीलकर्क्केतनसर्वद्रव्यसमृद्धये। चतुःषष्टीब्रीहि-सहस्राणामाधिपत्यं कारयति। एहि भगवति वज्रधरसागरगम्भीरबुद्धसत्ये सत्यवादिनि। ॐ चर 2 चिरि 2 चुरु 2 हुलु 2 मुलु 2 । लु लु लु लु लु। ले ले ले ले। इटि 2 मिटि 2 सर 2 संसर 2 विगत स इहागच्छ[ा]गच्छ भगवति वसुधारे मम सर्वसत्त्वानां च गृहे साधकानां मनो इच्छागमं परिपूरय। भगवति उत्तिष्ठ विद्यासर्वबुद्धा भगवन्तः समाज्ञापयन्ति स्वाहा। नमस्त्र्यध्विकानाम्। नमः सर्वतथागतानाम्। तद्यथा—ॐ नमो रत्नत्रयाय। ॐ नमश्चण्ड-वज्रपाणये। ॐ नमो वज्रक्रोधाय। महादंष्ट्रोत्कटभैरवाय। असिमुषलपरशुपाशगृहीतहस्ताय। ॐ अमृतकुण्डलि ख ख खाहि 2 तिष्ठ 2 बन्ध 2 हन 2 दह 2 पच 2 मर 2 गर्ज्ज 2 विस्फोटय 2 सर्वविघ्नविनायकानां महागणपतिजीवितान्तकराय हूँ 2 फट् स्वाहा। ॐ सुम्भनि सुम्भनि हूँ गृह्ण 2 गृह्णापय 2 हूँ आनय हो भगवन् विद्याराज हूँ 2 फट् स्वाहा। ॐ वज्रयक्ष हन हूँ फट् स्वाहा। ॐ आहरिते महाबले हूँ स्वाहा। ॐ आः हूँ स्वाहा। ॐ आः सितातपत्रे हूँ स्वाहा। ॐ मणिपद्मे हूँ स्वाहा। ॐ वज्रधर्मे हूँ स्वाहा। ॐ सर्वविशुद्धिधर्मता वज्रसिद्धि हूँ स्वाहा। ॐ सर्वतथागतज्ञानयोगीश्वरि हूँ स्वाहा। ॐ श्रीसर्वतथागतभवाय स्वाहा। ॐ प्रज्ञे 2 महाप्रज्ञे श्रुतिस्मृतिविजये स्वाहा। ॐ चले चुले चुन्दे स्वाहा। तद्यथा—ॐ श्रीसौभाग्यरूपे स्वाहा। ॐ श्रीदिव्यरूपे स्वाहा। ॐ श्रीदीप्तरूपे

---

1. ०भ्यः-ग.
2. 'मे तथागतस्य' नास्ति-ग.

स्वाहा। [1]ॐ श्रीसुरूपे स्वाहा। ॐ श्रीरूपमते स्वाहा। ॐ श्रीरूपशोभे स्वाहा। ॐ श्रीरूपमति स्वाहा। ॐ श्रीसुवर्णवपुरूपे स्वाहा। ॐ श्रीज्ञानरूपे स्वाहा। ॐ श्रीप्रज्ञापारमिते स्वाहा। ॐ श्रीवज्रसत्त्वहृदये स्वाहा। ॐ श्रीभद्रे स्वाहा। ॐ श्रीसुभद्रे स्वाहा। ॐ श्रीसुभद्रमति स्वाहा। ॐ श्रीमङ्गले स्वाहा। ॐ श्रीसुमङ्गले स्वाहा। ॐ श्रीमङ्गलमति स्वाहा। ॐ श्रीआलये स्वाहा। ॐ श्रीअले 2 स्वाहा। ॐ श्रीअमले स्वाहा। ॐ श्रीविमले स्वाहा। ॐ श्रीनिर्मले स्वाहा। ॐ श्रीमलनाशनि स्वाहा। ॐ श्रीअचले स्वाहा। ॐ श्रीचले स्वाहा[2]। ॐ श्रीअचपले(०अचलबले) स्वाहा। ॐ श्रीउद्घाटनि स्वाहा। ॐ श्रीउद्भेदनि स्वाहा। ॐ श्रीउद्भाषिणि स्वाहा। ॐ श्रीउद्घोषणि स्वाहा। ॐ श्रीप्रियङ्करि स्वाहा। ॐ श्रीप्रीतिकरि स्वाहा। ॐ श्रीश्रियङ्करि स्वाहा। ॐ श्रीशिवङ्करि स्वाहा। ॐ श्रीशुभङ्करि स्वाहा। ॐ श्रीश्रीकरि स्वाहा। ॐ श्रीकीर्तिकरि स्वाहा। ॐ श्रीलक्ष्मीकरि स्वाहा। ॐ श्रीसत्यवति स्वाहा। ॐ श्रीशस्यवति स्वाहा। ॐ श्रीधनवति स्वाहा। ॐ श्रीधान्यवति स्वाहा। ॐ श्रीधनकरि स्वाहा। ॐ श्रीधान्यकरि स्वाहा। ॐ श्रीधने 2 स्वाहा। ॐ श्रीधनेश्वरे स्वाहा। ॐ श्रीश्रीमति स्वाहा। ॐ श्रीप्रभामति[3] स्वाहा। ॐ श्रीरुरु स्वाहा। ॐ श्रीसुरूपमले स्वाहा। ॐ श्रीविगतमले स्वाहा। ॐ श्रीविपुलगर्भे स्वाहा। ॐ श्रीअक्षयमते स्वाहा[4]। ॐ श्रीअक्षयकोशे स्वाहा। ॐ श्रीधर्मददे[5] मोक्षप्रदे स्वाहा। ॐ श्रीइच्छाप्रदे स्वाहा। ॐ श्रीसर्व[6]सुखप्रदे स्वाहा। ॐ श्रीधनदे धनपूजिते

---

1. इतः परं भो० संक्षिप्तपाठः-तद्यथा—ॐ सुरूपे भद्रे भद्रवति अङ्गले मङ्गले मङ्गलवति अले अचले अचलबले उद्घाटनि उद्भेदिनि पश्यवति दानपति धान्यपति श्रीमति प्रभवति अमले विमले निर्मले रुरु सुरूपे सुरूपमले विमले चले अर्चनस्ते अननस्ते विननस्ते विश्वकेशि विश्वनिशि अङ्कुरे मङ्कुरे प्रभङ्कुरे वीरमे विधमे रिरिमे दिदिमे दुदुमे खखमे ततरे तर तर तार तार वज्रे वज्रे वज्रे वमे टके टके ठके ठके उग्के बुग्के ठके ठरको अवर्तनि वरशन षदनि वज्रधरसागरनिर्घोषान् तथागतमनुस्मर स्मर स्मर सर्वतथागतसत्यमनुस्मर धर्मसत्यमनुस्मर संघसत्यमनुस्मर दत दत पूर पूर पूरय पूरय पूरणि भर भरणि अमले सुमङ्गल शान्तमति शुभमति मङ्गलमति महामति महामति भद्रवति प्रभवति सुचन्द्रमति आगच्छ आगच्छ समयमनुस्मर स्वाहा। आवरणिमनुस्मर स्वाहा प्रभवमनुस्मर स्वाहा। दीदीमनुस्मर स्वाहा। तेजोमनुस्मर स्वाहा। विजयमनुस्मर स्वाहा। हृदयमनुस्मर स्वाहा। सर्वसत्त्वविनयमनुस्मर स्वाहा। ॐ वसुधारे स्वाहा। ॐ वसुश्रिये स्वाहा। ॐ श्रीवसु स्वाहा। ॐ वसु स्वाहा।
2. 'श्रीचले स्वाहा' नास्ति-ख.
3. प्रभावमति-ग.
4. 'ॐ श्रीअक्षयमते स्वाहा' नास्ति-ग.
5. धनं दे-क.
6. 'सर्व' नास्ति-ग.

स्वाहा। ॐ श्रीअपचायनीये स्वाहा[1]। ॐ श्रीअजमुखे स्वाहा। ॐ श्रीअर्च्चनीये स्वाहा। ॐ श्रीअर्च्चनास्ते स्वाहा। ॐ श्रीअननन्ते स्वाहा[2]। ॐ श्रीअननस्ते विननस्ते स्वाहा। ॐ श्रीविनस्ते स्वाहा। ॐ श्रीधि(वि)ननस्ते स्वाहा। ॐ श्रीविश्वस्ते स्वाहा। ॐ श्रीविश्वकेशि स्वाहा। ॐ श्रीविशुद्ध[3]शीले स्वाहा। ॐ श्रीविश्वऋषि स्वाहा। ॐ श्रीविशुद्धरूपे स्वाहा। ॐ श्रीविगुणि[4] विगुणिषे विगुणे[5] स्वाहा। ॐ श्रीविगुणिषे स्वाहा[6]। ॐ श्रीअङ्कुरे स्वाहा। ॐ श्रीमङ्कुरे स्वाहा। ॐ श्रीप्रभङ्कुरे स्वाहा। ॐ श्रीअमोघाङ्कुशे जः हूँ वँ होः स्वाहा। ॐ श्रीआकर्षणि स्वाहा। ॐ श्रीआवेशनि स्वाहा। ॐ श्रीप्रवेशनि स्वाहा। ॐ श्रीरिरिमे स्वाहा। ॐ श्रीरुरुमे स्वाहा। ॐ श्रीधधमे स्वाहा। ॐ श्रीधिधिमे स्वाहा। ॐ श्रीधूधूमे स्वाहा। ॐ श्रीखखमे स्वाहा। ॐ श्रीखुखुमे स्वाहा। ॐ श्री तर 2 स्वाहा। ॐ श्री ततर स्वाहा। ॐ श्री तरे तरतरे तार तमे मेरुर विरुर तारय 2 ॐ श्री तारयन्तु[7] माँ भगवति वसुधारानाम धारणी मम सर्वसत्त्वानां च इच्छा[8]गमेन ॐ श्री[9]भगवति ॐ तारे तुत्तारे तुरे स्वाहा। ॐ श्रीभगवति[10] वसुधारानाम धारणी मम महारक्षावरणगुप्तिङ्करि स्वाहा। ॐ श्रीवज्रे 2 महावज्रे[11] स्वाहा। ॐ श्रीवज्रोपमे स्वाहा। ॐ श्रीमहावज्रोपमे स्वाहा। ॐ श्रीआवर्तनि स्वाहा। ॐ श्रीप्रवर्तनि स्वाहा। ॐ श्रीनिष्पादनि स्वाहा। ॐ श्रीवसुधारे स्वाहा। ॐ श्रीवसुं ददे वसुधे[12] कुरु 2 स्वाहा। ॐ श्रीटक्के 2 स्वाहा। ॐ श्रीठक्के 2 स्वाहा। ॐ श्रीडक्के 2 स्वाहा। ॐ श्रीढक्के 2 स्वाहा। ॐ श्रीतुक्के 2 स्वाहा। ॐ श्रीभुक्के 2 स्वाहा[13]। ॐ श्रीबुक्के 2 स्वाहा। ॐ श्रीढक्के 2 स्वाहा। ॐ श्रीधक्के

---

1. 'ॐ श्रीअपचाय० ....स्वाहा' नास्ति-क.
2. 'ॐ श्रीअननन्ते स्वाहा'-नास्ति-ग.
3. विशुद्धि-क.
4. विगुणि-ग.
5. विगुणीये-ग.
6. 'ॐ श्रीविगुणिषे स्वाहा'-नास्ति-ग.
7. ॐ श्रीतरु तर तर तरु तारय 2 तारतु-ग.
8. सर्वइच्छा-ग.
9. 'श्री'-नास्ति-ग.
10. 'भगवति'-नास्ति-ग.
11. 'महावज्रे'-नास्ति-ग.
12. वसुदे-ग.
13. 'ॐ श्रीभुक्के 2 स्वाहा'-नास्ति-क.

स्वाहा। ॐ श्रीवर्षणि स्वाहा[1]। ॐ श्रीप्रवर्षणि स्वाहा। ॐ श्रीउत्थापिनि स्वाहा। ॐ श्रीवज्रधरसागरनिर्घोषो नाम तथा[2]गतसत्यमनुस्मर 3 स्वाहा। ॐ श्रीसर्वतथागतसत्यमनुस्मर 3 स्वाहा। ॐ श्रीसर्वबुद्धसत्यमनुस्मर 3 स्वाहा[3]। ॐ श्रीसर्वधर्मसत्यमनुस्मर 3 स्वाहा। ॐ श्रीसङ्घसत्य[4]मनुस्मर 3 स्वाहा। ॐ श्रीतट मम सपरिवारस्य सर्वसत्त्वानां च सर्वाशापरिपूरय 2 मम सर्वसत्त्वानां च गृहे[5] आकाशगतं वा पृथिवीगतं वा जलगतं वा स्थलगतं वा अन्तरीक्षगतं वा भूमिगतं वा स्वर्गगतं वा मर्त्यगतं वा पातालगतं वा समुद्रगतं वा सप्तद्वीपान्तगतं[6] वा सर्वत्रगतं वा पर्वतान्तगतं वा[7]। भगवति वसुधारे[8] अस्मिन् गृहे मणिमुक्तिवज्रवैडूर्यशङ्खशिलाप्रवालजातरूपरजतमरकतमुसारगल्बकर्केतनपद्मरागइन्द्रनीलाद्यनेकरत्नानि सौवर्णरजतताम्रलोहधातुमूलजीवादीनि च[9] अनेक धनधान्यचतु:षष्टीब्रीहिसहस्राणि च मम सर्वसत्त्वानां च कोशकोष्ठागाराणि च सर्वोपकरणानि भरणि[10] 2 स्वाहा। ॐ श्रीपरिपूरय स्वाहा। ॐ श्रीमङ्गले स्वाहा। ॐ श्रीसुमङ्गले स्वाहा। ॐ श्रीमङ्गलमति स्वाहा। ॐ श्रीसुमङ्गलमति[11] स्वाहा। ॐ श्रीशुभमति[12] स्वाहा। ॐ श्रीशान्तमति स्वाहा। ॐ श्रीयोद्वि(शुभ)मति स्वाहा। ॐ श्रीमहाशुभमति स्वाहा। ॐ श्रीमहामति स्वाहा[13]। ॐ श्रीमहार्थमति स्वाहा। ॐ श्रीप्रभावमति स्वाहा[14]। ॐ श्रीभद्रमति स्वाहा। ॐ श्रीशुभ[15]भद्रमति स्वाहा। ॐ श्रीजयमति स्वाहा। ॐ श्रीविजयमति स्वाहा। ॐ

---

1. 'ॐ श्रीवर्षणि स्वाहा'-नास्ति क.
2. निर्घोषतथा०-क.
3. 'ॐ श्रीसर्वतथागत.... 3 स्वाहा'-नास्ति-ग.
4. ॐ श्रीसर्वसत्य०-ग.
5. ०पूरय भगवति अस्मि[न्] गृहे-ग.
6. ०द्वीपान्तरगतं-ग.
7. 'पर्वतान्तगतं'-नास्ति-ग.
8. वसुधारा-क.
9. 'च' नास्ति-ग.
10. सर्वोपकरणान्याभरणानि-ग.
11. ०सुभद्रमति-ग.
12. ॐ श्रीभद्रमति-ग.
13. 'ॐ श्रीयोद्विमति.....महामति स्वाहा'-नास्ति-ग.
14. 'ॐ श्रीप्रभावमति स्वाहा' नास्ति-ग.
15. श्रीमहाशुभ०-ग.

श्रीसुचन्द्रमति स्वाहा[1]। ॐ श्रीगुर्विणीसुखेन प्रसूतनि महातेजः श्री स्वाहा। ॐ शान्तमति स्वाहा। ॐ श्रीमहापौष्टमति स्वाहा। ॐ श्रीसर्वजनवशंकरि स्वाहा। ॐ श्रीसर्वदुष्टनिकृन्तनि स्वाहा[2]। ॐ श्रीसर्वशत्रुविनाशनि हूँ फट् स्वाहा। ॐ श्रीआगच्छागच्छसमयमनुस्मर स्वाहा। ॐ श्रीहृदयमनुस्मर स्वाहा। ॐ श्रीउपहृदयमनुस्मर स्वाहा। ॐ श्रीआवरण[3]मनुस्मर स्वाहा। ॐ श्रीआधारमनुस्मर स्वाहा। ॐ श्रीप्रभावमनुस्मर स्वाहा। ॐ श्रीस्वभावमनुस्मर स्वाहा। ॐ श्रीधृतिमनुस्मर स्वाहा। ॐ श्रीजयमनुस्मर स्वाहा। ॐ श्रीविजयमनुस्मर स्वाहा[4]। ॐ श्रीसर्वसत्त्वसमयमनुस्मर स्वाहा। श्रीसर्वतथागतविनयमनुस्मर स्वाहा। ॐ श्रीवसुधारे स्वाहा। ॐ श्रीवसुधा स्वाहा[5]। ॐ श्रीवसुधे स्वाहा। ॐ श्रीवसु[मु]खि स्वाहा। ॐ श्रीवसुधारे[6] स्वाहा। ॐ श्रीवसुधे स्वाहा।[7] ॐ श्रीवसुधरि स्वाहा। ॐ श्रीवसुमति प्रिये स्वाहा। ॐ श्रीवसुधारिणिये स्वाहा। ॐ श्रीवसुमति श्रिये[8] स्वाहा। ॐ श्रीवसुधारे धरणि धारणी वसुधारणीये स्वाहा। [9]ॐ श्रीलक्ष्मीये स्वाहा। ॐ श्रीलक्ष्मीनि[10]वासनीये स्वाहा। ॐ श्रीभूतलनिवासिनीये स्वाहा[11]। ॐ श्रीवसुधे स्वाहा। ॐ श्रीश्रिये श्रीकरि[12] धनकरि धान्यकरि ब्री[13] स्वाहा। ॐ श्रीवसुधारे[14] स्वाहा। ॐ श्रीसमये सौम्य[15]समयंकरि

---

1. ॐ श्रीसुभद्रमति स्वाहा। ॐ श्रीमहासुभद्रमति स्वाहा-ग.
2. 'ॐ महाशान्तमति....०निकृन्तनि स्वाहा' नास्ति-क.
3. आवर्ण०-क.
4. 'ॐ श्रीविजयमनुस्मर स्वाहा' नास्ति-क.
5. 'ॐ श्रीवसुधा स्वाहा' नास्ति-क.
6. वसुधा-ग.
7. इतः परं 'ॐ श्रीवसुधि स्वाहा' इत्यधिकम्-ग.
8. प्रिये-ग.
9. इतः पूर्वं ''ॐ श्रीलक्ष्मीभूतनिवासिनीये स्वाहा'' इत्यधिकम्-ग.
10. श्रीलक्ष्मीभूतनि०-ग.
11. 'ॐ श्रीमहाभूतलनिवासिनिये स्वाहा'-नास्ति-ग.
12. शाककरि-क.
13. ब्रीं-ख.ग.
14. ०धारे श्री-ख.
15. सौम्ये-ख.ग.

महासमये[1] स्वाहा। ॐ श्रीधनधान्यसमये श्रीकरि[2] वसुन्धरि वसुधे स्वाहा। ॐ श्रीवसुधारे स्वाहा[3]। ॐ श्रीवसुधारे एह्येहि भगवति समयमनुस्मर सिद्धिं कुरु मे हूँ[4] स्वाहा। ॐ श्रीवसुधारा[5] धारण्यै वरप्रदायै सर्वधनधान्यसर्वरत्नवस्त्रालङ्कारसर्वब्रीह्याादिभिः सर्वोपकरणैः समृद्धिं मे देहि सर्वसत्त्वानां च देहि मे[6] शान्तिं पुष्टिं[7] वशं सिद्धिं च ददापय[8] स्वाहा। ॐ श्रीधनधान्याय विन्महे[9] सर्वरत्ना[10]लङ्कारसर्वोपकरणानि धीमहि[11] तन्नो[12] श्रीवसुधारणी प्रचोदयात् स्वाहा। ॐ आः स्वाहा। ॐ स्वः स्वाहा। ॐ ह्रीः स्वाहा। ॐ स्वा[13] स्वाहा। ॐ होः[14] स्वाहा। ॐ यानपात्र वहे दूरगामिनि[15] अनुत्पन्नानां द्रव्याणामुत्पादनि उत्पन्नानां च[16] द्रव्याणां वृद्धिंकरि[17] टिलि 2 टेलि 2 इट 2 आगच्छ आगच्छ भगवति मा विलम्ब मम सर्वसत्त्वानां च मनोरथं परिपूरय दशभ्यो दिग्भ्यः यथोदकधाराः परिपूरयन्ति महीं यथा भास्करो रश्मिना विधमयन्ति तमां चित्तान्तराणि(?) तमस्तिमिरं यथा स शीतांशुनाप्यायति सर्वोषधीः। यथा महोषधीनां सर्वरोगान्नाशयन्ति। धनदो वरुणश्चैव इन्द्रो वैवस्वतस्तथा यथा महती मनोनुगामिनी सिद्धिं चिन्तयन्तु सततं सद्यः सर्वा प्रयच्छ[18] यथाकामं सिद्ध्यन्तां मन्त्रपदानीह। तद्यथा—ॐ खटे 2 खिति 2 खुटु 2 छुचु 2 मुरु 2 मुरुण्ड

---

1. 'महासमये'-नास्ति-ख.
2. इतः परं 'स्वाहा। ॐ श्रीधनधान्यकरि' इत्यधिकं-ख.
3. 'ॐ वसुधारे स्वाहा'-नास्ति-ग.
4. 'फट्' इत्यधिकम्-ग.
5. '०धारा' नास्ति-ग.
6. सर्वसत्त्वानां च देहि मे - इत्यस्य स्थाने 'ददापय'-ग.
7. पुष्टि-क; पौष्टिं-ग.
8. नास्ति-ग.
9. विद्महे-ख.ग.
10. ०वस्त्रा-ग.
11. धीमहे-क.
12. तना-क, तनो-ख.
13. स्वाः-ख.
14. हो-ग.
15. दुरागा०-ख.
16. 'च' नास्ति-ग.
17. वृद्धिकरि-क.
18. प्रयच्छध्वं-ख.

2 तर्परि देहि ददापय स्वाहा। ॐ उत्तिष्ठ हिरण्यसुवर्णधारे स्वाहा। ॐ वस्त्राभरणाय स्वाहा। ॐ अन्नपानाय स्वाहा। ॐ वसुनिधानाय स्वाहा। ॐ वसुधारे स्वाहा। ॐ वसुधाधिपतये स्वाहा। ॐ वसुधे स्वा[1] स्वाहा। ॐ गौ स्वाहा। ॐ सुरभे स्वाहा। ॐ इन्द्राय स्वाहा। ॐ पांचिकेभ्य: स्वाहा। ॐ यमाय स्वाहा। ॐ वरुणाय स्वाहा। ॐ वैश्रवणाय स्वाहा। ॐ विरुढकाय स्वाहा। ॐ विरुपाक्षाय स्वाहा। ॐ धृतराष्ट्राय स्वाहा। ॐ कुबेराय स्वाहा। ॐ अग्नये स्वाहा। ॐ नैर्ऋत्ये स्वाहा। ॐ वायव्ये स्वाहा। ॐ ईशानाधिपतये स्वाहा। ॐ अनन्ताय स्वाहा। ॐ कुलिशपालाय[2] स्वाहा। ॐ वासुकये[3] स्वाहा। ॐ शङ्खपालाय स्वाहा। ॐ तक्षकाय स्वाहा। ॐ पद्माय स्वाहा। ॐ महापद्माय स्वाहा। ॐ अष्टनागाधिपतये स्वाहा। ॐ जम्भलजलेन्द्राय स्वाहा। ॐ असुराधिपतये स्वाहा। ॐ सूर्य[4]ग्रहाधिपतये स्वाहा। ॐ चन्द्रनक्षत्राधिपतये स्वाहा। ॐ दिशि लोकपालाय स्वाहा। ॐ विदिशि लोकपालाय स्वाहा। ॐ सर्वलोकपालाय स्वाहा। ॐ सर्वधनधान्य-सुवर्णनिधानानि मां देहि ददापय स्वाहा। ॐ वसुधे स्वाहा। ॐ वसुधाधिपतये स्वाहा। ॐ सर्वदेवाय नम: स्वाहा। ॐ सर्वनागाय नम: स्वाहा[5]। ॐ सर्वयक्षाधिपतये[6] नम: स्वाहा। ॐ सर्वग्रहाधिपतये[7] नम: स्वाहा। ॐ सर्वपिशाचाधिपतये नम: स्वाहा। ॐ सर्वराक्षसाधिपतये नम: स्वाहा। ॐ सर्वभूताधिपतये नम: स्वाहा। ॐ सर्वप्रेताधिपतये नम: स्वाहा[8]। ॐ सर्वमरुताधिपतये[9] नम: स्वाहा[10]। ॐ सर्वमहामरुताधिपतये[11] नम: स्वाहा। ॐ सर्वडाकिनीभ्यो नम: स्वाहा। ॐ सर्वमहाकालाय[12] नम: स्वाहा। ॐ सर्वमातरिभ्यो नम: स्वाहा। ॐ सर्वभृङ्गरिभ्यो नम: स्वाहा। ॐ सर्वभूतनीभ्यो नम: स्वाहा। ॐ

---

1. 'स्वा' नास्ति-ख.
2. शङ्खपालाय-ग.
3. वासुकाय-क.
4. शून्य०-क.
5. 'ॐ सर्वनागाय नम: स्वाहा'-नास्ति-ग.
6. ॐ सर्वयक्षाय-ग.
7. ॐ सर्वग्रहाय-ग.
8. 'सर्वप्रेताधिपतये नम: स्वाहा' नास्ति-क.
9. ०मरुताय-क.
10. ॐ सर्वपवनाधिपतये नम: स्वाहा-ख.
11. ०मरुताय-क.
12. महाफलाय-क.

सर्वपिशाचनीभ्यो नमः स्वाहा। ॐ सर्वयक्षिणीभ्यो[1] नमः स्वाहा। एतेषां मम सर्वसत्त्वानां च सर्वधनधान्यसुवर्णनिधानानि देहि मां ददापय स्वाहा। ॐ जम्भलजलेन्द्राय सर्वद्रव्याणि[2] देहि मां ददापय स्वाहा। ॐ आर्यावलोकितेश्वराय हूँ स्वाहा। ॐ मणिपद्मे हूँ स्वाहा। ॐ वज्रपाणि सर्ववज्रधर हूँ स्वाहा। ॐ जम्भलजलेन्द्राय ज्लुँ प्लुँ सः स्वाहा। ॐ मणिभद्राय स्वाहा। ॐ पूर्णभद्राय स्वाहा। ॐ वैश्रवणाय स्वाहा। ॐ धनदाय स्वाहा। ॐ महाधनदाय स्वाहा। ॐ नन्दादेवी नमः स्वाहा। ॐ सुनन्दादेवी नमः स्वाहा। ॐ भद्रादेवी नमः स्वाहा। ॐ सुभद्रादेवी नमः स्वाहा। ॐ चिविकुण्डलिने[3] स्वाहा। ॐ केलि मालिनीये[4] स्वाहा। [5]ॐ जम्भलमुखेन्द्राय स्वाहा। ॐ जम्भलजलेन्द्राय स्वाहा। ॐ नमः श्रीआर्यजम्भलजलेन्द्राय स्वाहा। ॐ श्रीसर्व[6]जम्भलजलेन्द्राय [7]स्वाहा। ॐ जम्भलजलेन्द्राय स्वाहा। ॐ फूः शङ्खपालनागराजाय स्वाहा। ॐ श्रीवसुधारे स्वाहा। ॐ श्रीवसुधारणीये स्वाहा। ॐ हूँ[8] स्वाहा। ॐ श्रीवसुधारे स्वाहा। ॐ श्रिये[9] श्रीकरि धनकरि धान्यकरि ब्रीँ स्वाहा। ॐ श्रीइलादेवो स्वाहा। ॐ श्रीबलादेवी स्वाहा। ॐ श्रीवसुधारादेवी स्वाहा। ॐ श्रीवरुणादेवी स्वाहा। ॐ श्रीधनवति स्वाहा। ॐ श्रीधान्यवति स्वाहा। ॐ श्रीश्रीमती स्वाहा। ॐ श्रीप्रभावमती स्वाहा। ॐ श्रीचन्द्रमती स्वाहा। ॐ श्रीतेजमति स्वाहा। ॐ श्रीसर्वगुणवति स्वाहा। ॐ श्रीवसुधारे स्वाहा। ॐ श्रीवसुधा[10] स्वाहा। ॐ श्रीवसुन्धरि स्वाहा। ॐ श्रीजम्भलजलेन्द्राय स्वाहा। ॐ श्री ज्लुँ प्लुँ सः स्वाहा। ॐ श्री[11]गुह्यसकटिके सर्वे[12] आकर्षय 2 ॐ श्री आहरिते महाबले हूँ स्वाहा। ॐ श्रीगुप्तादेवी स्वाहा। ॐ श्रीसुगुप्तादेवी स्वाहा। ॐ श्रीसरस्वतीदेवी स्वाहा। ॐ श्रीचन्द्रकान्तादेवी स्वाहा। ॐ

---

1. ०यक्षणीभ्यो-ग.
2. सद्रव्याणि-क.
3. ०कुण्डले-क.
4. ०मालिने-ग.
5. इतः पूर्वं 'ॐ मुखेन्द्राय स्वाहा। ॐ चरेन्द्राय स्वाहा' इत्यधिकं-ग.
6. 'सर्व' नास्ति-ग.
7. इतः पूर्वं 'हूँ' इत्यधिकम्-ग.
8. ॐ श्री हूँ-ग.
9. श्रेये-क.
10. वसु-क.
11. 'श्री' नास्ति-ग.
12. सर्वं-ग.

श्रीधनदमहाधनदो स्वाहा। ॐ श्रीपद्मपहापद्मकौ स्वाहा। ॐ श्रीचिवि-कुण्डलिकेलिमालिनौ स्वाहा। ॐ श्रीपूर्णसुपूर्णौ स्वाहा। ॐ श्रीमहारत्ननिधि[1] पातकौ स्वाहा। ॐ स्वाहा। ॐ[2] जं स्वाहा। ॐ भ स्वाहा। ॐ ल स्वाहा। ॐ ज स्वाहा। ॐ ले स्वाहा। ॐ न्द्रा स्वाहा। ॐ य स्वाहा। ॐ स्वा स्वाहा। ॐ[12] हा स्वाहा। ॐ वज्रसमाज जः हूँ बँ होः। ॐ हूँ स्वाहा। ॐ श्री स्वाहा। ॐ क्ष्रीँ स्वाहा। ॐ ह्रीँ[3] स्वाहा। ॐ प्रज्ञाश्री स्वाहा। ॐ आः[4] स्वाहा। ॐ स्वः स्वाहा। ॐ सूँ हूँ स्वाहा। ॐ आः हूँ स्वाहा। एतेषां मम सर्वसत्त्वानां च[5] धनधान्यसुवर्णनिधानानि मां देहि ददापय स्वाहा। ॐ जम्भलजलेन्द्राय सर्वद्रव्यं देहि मां ददापय स्वाहा। ॐ स्वाहा[6]। ॐ भु[7] स्वाहा। ॐ स्वः स्वाहा। ॐ भुर्भुवः स्वाहा। ॐ दशभ्यो दिग्भ्यः स्वाहा। उत्पादयन्तु मे काक्षिमविरहमनुमोदयन्तु(?) इमे मन्त्रपदाः[8] सिद्ध्यन्तु। ॐ ॐ ॐ ॐ ॐ। हूँ हूँ हूँ हूँ हूँ। ह्रीँ ह्रीँ ह्रीँ ह्रीँ ह्रीँ। ॐ हूँ ह्रीँ। क्षेमारोग्यं धनं देहि ददापय स्वाहा। एष हृदयो भगवत्या महापापकर्मकारिणोऽपि मन्त्रपदानि सिद्ध्यन्ति[9]। किं पुनः श्रद्ध्याधि-मुक्तिकस्य पुरुषस्य[10] पुरुषप्रमाणं महाभोगं ददाति। ईप्सितं[11] मनोरथं परिपूरयति। ॐ वज्रे 2 महावज्रे[12] वज्रोपमे टके ठके हूँ फट्[13] स्वाहा। ॐ श्रिये[14] श्रीकरि धनकरि धान्यकरि ऐहि[15] आगच्छागच्छ ब्रीँ स्वाहा। ॐ शङ्खनिधानाय[16] स्वाहा। ॐ पद्मनिधानाय स्वाहा। ॐ अष्टौ यक्षिणी

---

1. निधान-ख.ग.
2-2. 'ॐ' नास्ति-ग. सर्वत्र.
3. ह्री-ग.
4. ॐ श्रीआ-ग.
5. 'च' नास्ति-ग.
6. 'ॐ स्वाहा'-नास्ति-ख.
7. भुवः-ख.ग.
8. मे मन्त्रपदः-क.
9. ०पदा सिध्यति-ग.
10. 'पुरुषस्य' नास्ति-क.
11. इप्सित-क.
12. 'महावज्रे' नास्ति-ग.
13. टक्के 2 ठक्के 2 हूँ फट्-ग.
14. श्रिय-क.
15. 'ऐहि' नास्ति-ख.ग.
16. निधाय-ग.

सर्वपूजा हूँ स्वाहा। ॐ यान्यान् सर्वकामं इहा कामयति। तान्तान् सर्वान् ईप्सितान् परिपूरयति। सिद्ध्यन्तु मन्त्रपदानि। तद्यथा—नमो रत्नत्रयाय। ॐ नमो देवि[1] धनदुहिते [2]वसुधारां पातय 2 धनेश्वरि रत्नदेहे हुरु 2 धनेश्वरि[3] रत्नं मे देहि ददापय रत्नसागर-महानिधाने निधानकोटिशतसहस्रपरिवारे एह्येहि[4] भगवति वसुधारे प्रविश्य मम पुरं मम भवनं महानिधानं पातय[5] 2 तुरु 2 कुरु 2 हूँ फट् कैलाशनिवासिनि स्वाहा। इयं सा गृहपति[6] वसुधारानाम धारणीमन्त्रपदा। अस्या धारण्याः प्रभावेण रोग[7]दुर्भिक्षम(न)रकादयो न प्रभवन्ति। यस्तु कुलपुत्र इमानि वसुधारानाम धारणीमन्त्रपदानि तथागतानामर्हता[नां] सम्यक्सम्बुद्धानां पूजां कृत्वा षण्मासाना[8]वर्त्तयेत्। ततः सिद्धो भवति। यस्यां दिशि इयं विद्या धार्यते सा दिक् पूज्यमाना भवति। यस्मिन् स्थाने पूज्यते पौष्टिकार्थं स्वगृहे वा पर गृहे वा श्रद्धया[9] परम श्रद्धया वसुधारा प्रतिमां भट्टारिकां वा पटं वा अग्रतोऽनुप्रसार्य चन्दनेन चतुरस्रं मण्डलकं कृत्वा पुष्पधूपदीप[10]गन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजघण्टापताकोपशोभिते बलिनैवेद्यविविधोपचारैर्यथाविभवं पूजां कृत्वा धर्मभाणकश्चापि सुगन्धजलस्नातः सुगन्धाङ्ग-शुचिवस्त्रं[11] प्रावृत्यमयूरासनोपरि समुपविश्य प्रतिमापट्टादिकं वा[12] स्थापयित्वा तमेवानु-स्मृत्य सूर्योदयवेलायां परि[13]पूजयित्वा प्रत्यहमखण्डसमादानतो यावदेव सकलां रात्रिं धारणीमविच्छिन्नमावर्त्तयेत्। तस्य क्रमेण सर्वसम्पत्तिर्भवति[14]। ततः प्राक्तेनऽपि दिवसे नियमेन

1. देवी-क.
2. इतः पूर्वं 'वसुधारे' इत्यधिकम्-ख.
3. 'रत्नदेहे हुरु 2 धनेश्वरि' नास्ति-क.
4. एहि-क.ग.
5. पातयन्तु-ग.
6. गृहपते-ग० भोटपाठः पुनरितः प्रारभ्यते।
7. 'दुःख' इत्यधिकम्-ग.
8. पद्मासाना०-क.
9. परगृहे वा श्रद्धया-इत्यस्य स्थाने 'शुचौ विविक्ते भूप्रदेशे गोमयेनोपलिप्य वितानवितनोपरि। ततो गृहपते यः कश्चित् कुलपुत्रो वा'-ग.
10. 'दीप'-नास्ति-ग.
11. वस्त्र-क, स्त्रां-ख.
12. 'वा' नास्ति-क.
13. 'परि' नास्ति-ख.ग.
14. '०र्भवन्ति'-क.

रात्रिमतिनामयित्वा पुनः[1] प्रत्यूषे सुगन्धजलस्नातः शुचिरमल[2]वस्त्रावृतो ब्रह्मचारी भूत्वा शुभे स्थाने सनिदानधारणीमविच्छिन्नमावर्त्तयेत् त्रीणिवाराणि। ततः कुलपुत्रो वा कुल दुहिता वा महापुरुषमात्रया वसुधारया[3] गृहं परिपूरयन्ति[4]। सर्वधनधान्यहिरण्यसुवर्णश्च सर्वोपकरणैश्च सर्वोपद्रवाश्च नाशयति। यद्वा तथैव प्रत्यूषे सुगन्धजलस्नातः शुचिरमल[5]-वस्त्रावृतो मद्यपानरहितो[6] निरामिषालवणभोजीब्रह्मचारी भूत्वा पौष्टिकार्थं स्वगृहे वा परगृहे वा शुभे स्थाने कोशकोष्ठागारे वा चन्दनेन चतुरस्त्रं मण्डलकं कृत्वा भगवतः श्रीमदार्यावलोकितेश्वरस्य तथागतस्य[7] सर्वश्रावकप्रत्येकबुद्ध[8]बोधिसत्त्वानां महामुद्रामन्त्र-विद्यादेवताया[9]श्चाग्रतो यथाविभवमुदारां पूजां कृत्वा सुसमाहितः तामेव भगवतिं भावयेन्नेक-चित्तोत्पादेन दानपतिहितसुखाशयः श्रद्धया परमश्रद्धया सनिदानामिमां धारणीमेक-महोरात्रं[10] सप्ताहोरात्राणि वा परिक्षना(क्षा)लयन्नाविच्छिन्नमावर्तयेत्। आचार्यस्तथैव नियमेन रात्रे स्त्रिष्कृत्वा दिवसस्यापि स्त्रिष्कृत्वा[11] सर्वबल्युपहारैः पूजयेत्। तथैव दानपतिरपि[12] नियमेन सर्वमाचरेत्। पाठकालेषु[13] यथाशक्त्या सुवर्णादिदानं दद्यात्। ततः पठितसिद्धो भवति। ततः क्षणमात्रया गृहपते वसुधारया महापुरुषमात्रया वसुधारा दानपतेः[14] गृहं परिपूरयति। सर्वधनधान्यहिरण्यसुवर्णः सर्वोपकरणैश्च सर्वोपद्रवाश्च नाशयति। तेन हि त्वं गृहपते सर्वप्रयत्नीकृत्योद्गृह्णीष्वेमां वसुधारानाम धारणीं धारय वाचय देशय ग्राहय पर्यवाप्नुहि परेभ्यश्च विस्तरेण संप्रकाशयति स्म। ततो भविष्यति दीर्घरात्रमर्थाय हिताय सुखाय भोगाय

---

1. पुनः पुनः-ख.
2. '०रमल' नास्ति-ख.
3. ०राया-क.ख.
4. ०पूरयति-ग.
5. '०रमल'-नास्ति-क.ख.
6. विरहितो-ग.
7. तथागतानां-ग.
8. बुद्धानां च-ग.
9. देवतानां-ग.
10. ०रात्राणि वा-ग.
11. 'दिवसस्यापि स्त्रिष्कृत्वा' नास्ति-क.
12. ०रपि-नास्ति-ग.
13. पाठकाले-ग.
14. 'दानपतेः' नास्ति-ग.

योगसम्भाराय क्षेमाय सुभिक्षाय चेति[1]। ततः साधु भगवन्निति। भगवतो वचनं[2] प्रतिश्रुत्य भगवतः[3] सुचन्द्रो नाम गृहपतिः भगवतोऽन्तिकादिमां वसुधारानाम धारणीं श्रुता[4]। श्रुत्वा हृष्ट-तुष्टा उदग्र आत्तमना प्रमुदितः प्रीतिसौमनस्य जातो भगवतश्चरणयोर्निपत्य कृतकरपुटो भूत्वा भगवन्तमेतदवोचत्। उद्गृहीता मे भगवन्नियं वसुधारानाम धारणी प्रह्वीकृता धारिता वाचिता पर्यवाप्ताऽनुमोदिता मनसा सुपरिचिन्तिता परेभ्यश्च विस्तरेण इदानीमहं सम्प्रकाशयिष्यामीति। अथ तत् क्षणमात्रेण स सुचन्द्रो नाम गृहपतिः परिपूर्णकोशकोष्ठागारोऽभूत्[5]। अथ खलु सुचन्द्रो नाम गृहपतिर्भगवन्तमनेकशतसहस्त्रं प्रदक्षिणीकृत्य भगवतः पादौ शिरसाऽभिवन्द्य भगवन्तं पुनः पुनरवलोक्य भगवतोऽन्तिकात् स्वगृहं प्रकान्तः। प्रक्रम्य[6] च स गृहपतिराभ्यन्तरं प्रविश्याद्राक्षीत् परिपूर्णसर्वधनधान्यरत्नजातसमृद्धं सर्वोपकरणैश्च कोशकोष्ठागाराणि च परिपूर्णानि दृष्टा च विस्मितो हृष्टतुष्ट उदग्र आत्तमना प्रमुदितप्रीतिसौमनस्य जातः परिपूर्णमनोरथं परितुष्यमाणे कुशलमूलमृदुस्निग्धहृदये बुद्धे भगवति वसुधारानाम धारणीं च तीव्रप्रेमगुरुगौरवं प्रासादिकबहुमाने चित्रिकारञ्च बोधि[7]चित्तं समुत्पादयति स्म।

अथ खलु भगवानायुष्मन्तमामन्त्रयते स्म। गच्छ त्वं आनन्द सुचन्द्रस्य गृहपतेरागारं पश्य परिपूर्णसर्वधनधान्यसमृद्धं सर्वरत्नसुवर्णैः सर्वोपकरणैश्च महाकोशकोष्ठागाराणि च[8] परिपूर्णानि। अथ खल्वायुष्मानानन्दो भगवतो वचनं प्रतिश्रुत्य येन कौशाम्बीमहानगरी येन सुचन्द्रनिवेशस्तङ्गत्वा अ(त)स्यागारं तेनोपसङ्क्रान्त उपसङ्क्रम्याभ्यन्तरं प्रविश्याद्राक्षीत् परिपूर्णसर्वधनधान्यसमृद्धं[9] महाकोशकोष्ठागाराणि च परिपूर्णानि दृष्ट्वा हृष्टतुष्ट उदग्र आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातो येन भगवांस्तेनोपसङ्क्रान्त उपसङ्क्रम्यायुष्मानानन्दो विस्मितः[10], प्रीतिसौमनस्य जातो भगवतः पादौ शिरसाऽभिवन्द्य भगवन्तमेतदवोचत्। को

---

1. 'ततो भवि०......चेति' इत्यस्य स्थाने 'सर्वधनधान्यहिरण्यसुवर्णः भोगोपभोगसंभोगाय क्षेमाय सुभिक्षाय चेति'-ग.
2. 'भगवतो वचनं' नास्ति-ग.
3. 'भगवतः' नास्ति-ग.
4. 'श्रुता' नास्ति-क.ख.
5. 'अथ तत् ..... ०गारोभूत्' नास्ति-क.
6. परिक्रम्य-ग.
7. 'बोधि' नास्ति-ग.
8. 'च' नास्ति-क.
9. इतः परं 'रत्नसमृद्धं' इत्यधिकम्-ख.
10. 'विस्मितः' नास्ति-ग.

भगवन् हेतुः कः प्रत्ययो येन सुचन्द्रो नाम गृहपतिर्महाधनो महाभोगो महाकोशकोष्ठागार-धनधान्यहिरण्यसुवर्णरत्नजात[1] समृद्धो जातः। भगवानाह श्राद्धश्चानन्द सुचन्द्रो नाम गृहपतिः परमश्रद्धः कल्याणाशयो धारिता वाचिता च तेनेयं वसुधारानामधारणी प्रवर्तिता उद्गृहीता धारिता वाचिता पर्यवाप्ता अनुमोदिता परेभ्यश्च विस्तरेण सम्प्रकाशितेति। तेनोक्ता आनन्द त्वमप्युद्गृहीष्वेमां वसुधारानाम धारणीं धारय वाचय देशय ग्राहय पर्यवाप्नुहि परेभ्यश्च विस्तरेण संप्रकाशय, भविष्यन्ति तद् बहुजनहिताय बहुजनसुखाय लोकानुकम्पायैर्महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च यस्य गृहपतेरानन्देयं धारणी हस्तगता पुस्तकगता भविष्यति। हृदयगता धारिता वाचिता चिन्तिता श्रुतिमात्रगता गृहगता पुस्तकगता पूजिता च भविष्यति। तस्य दुर्भिक्षभयं न भविष्यति। क्रमेण विभवं तस्य सम्बर्धते। बहुजनहिताय बहुजनसुखाय लोकानुकम्पायैर्महतोजनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च नाहमानन्द तं धर्मं समनुपश्यामि। सदेवके लोके समारके सब्रह्मके सश्रमण-ब्राह्मणिकायां प्रजायां सदेवासुरमानुष्याणां य इमां विद्यां अन्यथा करिष्यति अतिक्रमिष्यति वाचा नैतत् स्थानं विद्यते। तत् कस्य हेतोरभेद्यानि ह्येतान्यानन्द वसुधारानामधारणीमन्त्रपदानि न चेतानि क्षीणकुशलमूलानां श्रुतिपथमागमिष्यति। कः पुनर्वादो ये पुस्तकगतानि हृदयगतानि धारयिष्यन्ति वाचयिष्यन्ति। तत्कस्य हेतोः सर्वतथागतैरियं भाषिता धारणी अधिष्ठिता स्वमुद्रया मुद्रिता प्रकाशिता अनुमोदिता प्रभाविता प्रशस्ता संवर्णिता विवृता उत्तानीकृता आरोचिता आख्याता दरिद्राणां सत्त्वानां नानाव्याधिपरिपीडितानां सर्वदुष्टसत्त्वभयोपद्रुतानामर्थाय हिताय सुखाय सम्भोगाय[2] परिभोगाय क्षेमाय चेति। आनन्द आह—उद्गृहीता मे भगवन्नियं वसुधारानामधारणी धारिता वाचिता पर्यवाप्ता अनुमोदिता मनसा सुपरिचिन्तिता च साधु भगवन्निति।

अथ खल्वायुष्मानानन्द उत्थायासनादेकासमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य कृत करपुटो भूत्वा भगवतः मुखमवलोक्य यदीदानीं तस्यां वेलायामिमां गाथा अभाषत्।

अचिन्तयो द्रव्यसमृद्धये सदा अनेकरत्नं सुसमृद्धकाञ्चनम् ।
आपूर्णमस्मिन् गृहेषु मण्डलं नमोऽस्तुते श्रीवसुधारणी सदा ॥

---

1. 'जात' नास्ति-ग.
2. 'सम्भोगाय' नास्ति-ख.

अचिन्तयो भगवान् बुद्धो बुद्धधर्मोऽप्यचिन्तया ।
अचिन्तयेति प्रसन्नाना(?) विपाकश्चाप्यचिन्तया ॥

शास्ता जानय सर्वज्ञ धर्मराजपरम्परा ।
पारगामिफलं प्राप्तो बुद्धवीर नमोऽस्तु ते ॥

अथ खल्वायुष्मानानन्दो इमं धर्मपर्यायं भगवतोऽन्तिकात् श्रुत्वा हृष्टतुष्ट उदग्र आत्तमनाः प्रमुदिताः प्रीतिसौमनस्यजातो भगवन्तमेतदवोचत्। को नामायं भगवन्त धर्मपर्यायः, कथं भगवन् धारयाम्येनं धर्मपर्यायम्। भगवानाह—सुचन्द्र गृहपतिः परिपृच्छेत्यपि आनन्द धारय सर्वधनधान्यहिरण्यसुवर्णरत्ननिधानमित्यपि धारय, सर्वतथागतप्रशस्तेत्यपि धारय, सर्वतथागताधिष्ठिता वसुधारणीकल्पमित्यपि धारय।

इदमवोचद्भगवानात्तमना आयुष्मानानन्दस्ते च भिक्षवस्ते च बोधिसत्त्वा महासत्त्वाः सा च सर्वावतीपर्षत्सदेवमानुषासुरगरुडगन्धर्वश्च लोको भगवतो भाषितमभ्यनन्दन्निति।

**॥ आर्य श्रीवसुधारानामधारणीपरिसूत्र[1] समाप्ता ॥**

ये धर्मा हेतुप्रभवा हेतुं तेषां तथागतो ह्यवदत् ।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥[2]



1. 'परिसूत्र' नास्ति-ख.
2. इतः परं 'क' मातृकायां—
देय धर्मोयं प्रवरमहायानयायिनः॥ ० ॥ सम्वत् 814 चैत्रमासस्य शुक्लप्रतिपक्षप्रतिपत्तिथिः रेवतीनक्षत्रं योगयथाक्रममात्रे शुक्रवासरे मीनराशिगते सवितरि सर्वराशिचन्दनमसि। लिखिता श्रीवज्राचार्य.........
धर्मदेन थवतादयकापुथिचोय धुनकाहिन जुरो॥
शुभमस्तु सर्वदः। यथा दृष्टं तथा लिखितं लेखको नास्ति दोषः॥ ० ॥

## ABSTRACTS OF ARTICLES

*Stotras* *1-4*

These two Stotras i.e. Bhagavat-stuti and Lokeśvararāja-tathāgatastuti, have been taken from the Rāṣṭrapālaparipṛcchā (p. 120-121) and the Sukhāvatīvyūha (p. 223-224) of the Mahāyānasūtrasaṁgraha (first part) respectively, published from Mithila Vidyapitha, Darbhanga. The titles of the Stotras are as given by the Editor.

*Introduction of Rare Texts* *5-16*

In the present issue, the description of eight texts is given. A photocopy of these manuscripts is taken from the collection of the Late Prof. Jagannatha Upadhyaya and Prof. R. C. Pandeya, Shantarakshita Library, CIHTS., Sarnath. It is learnt from the photocopy that the original manuscripts are from the Asiatic Society, Kolkata.

1. Āryaṣaṇmukhī Dhāraṇī
2. Vasudhārānāma Dhāraṇī
3. Ṣoḍaśamānasībhāvacakra
4. Āryagrahamātṛkānāma Dhāraṇī
5. Paramārthanāmasaṁgīti
6. Śrīcaṇḍamahāroṣaṇasādhana
7. Sahajābhilāṣanāmābhisamaya
8. Dhāraṇīsaṁagraha

*Synthesis of the Doctrines in the Buddhist Yogatantras* *17-24*

The Buddhist Yoga begins with Lord Buddha. One can find ample examples to that effect in Buddhist Sūtra texts. In latter period, Buddhist masters developed this concept in their own commentaries. Buddhist master Padmavajra explained thirty seven tattvas, while commenting upon the text of the Tattvasaṁgraha, following Buddhaguhya's tradition. In the

Yogatantras, the application and relation of these tattvas is clearly seen. The Yogatantras lay more emphasis on the Ṣaḍaṅgayoga. For this reason, it is different from other, non-Buddhist tantras. The present article examines how the thirty seven tattvas have been laid down in the Yogatantras, and subsequently elaborated in the Tibetan Tradition.

*"Good Frontage": A Short Autobiography of Ācārya Tsong kha pa* *25-36*

This is a well-known autobiography *(avadāna)* of Ācārya Tsong kha pa, the head-ornament of the scholars of Tibet, endowed with miraculous creative power and sharp intellect. In the present autobiography is reflected the essence of the activity of Tsong kha pa's body, speech and mind. For this reason, the present work is considered to be a great summary statement *(uddāna).* There are four topics divided into three sections: 1) How Tsong kha pa listened to the extremely extensive and varied discourses in his early life; 2) How he experienced the emergence of the subject matter of all the authentic texts in the form of admonition *(avavāda)* in the middle stage of his life; 3) How he brought it into practice *(anuṣṭhāna)* day and night; and 4) How he brought about the transformation *(pariṇāmanā)* for the advancement of the teachings of the Buddha. The purpose of this *avadāna* is to enhance the immeasurable roots of his own merit as well as to open the gate of the path of the Buddhahood for others. There are a number of commentaries on this work, composed by Tibetan scholars such as Phur lcog ngawang byams pa, Shaṅ stoṅ bstan pa rgya mtsho and so on. Having taken into consideration the importance of this work, an edition of this work is being published in the present issue, along with its Hindi translation and a scholarly introduction.

*Bhūtaḍāmaratantra: A Brief Introduction* *37-54*

In the previous two issues of *Dhīḥ*, a brief introduction to this Tantra was given on the basis of a micro-film copy of the manuscript from Shantarakshita Library, CIHTS, Sarnath. In the present issue, the

introduction of the same text is given on the basis of the text published from Pracya Vidya Prakashan, Varanasi. Even though the subject matter of both the editions is the same; the contents of the micro-film are not systematic. The manuscript available in the micro-film has 9 paṭalas; however the published text has 16.

The importance of this treatise is that, in each sādhana the Mantroddhāra of the mantras of accomplished deities and their mudrā and sādhana is given in a systematic order. The differences between these two editions are mentioned. In the present issue, a brief outline of the first eight paṭalas is given.

*Sources of Rare Texts* *55-75*

The information about 71 important manuscripts was given under this title in *Dhīḥ*, Vol. 43. In the present issue, a list of other 61 manuscripts is given.

*Various Aspects of Mudrā in Buddhist Tantras* *76-88*

In the previous issue of *Dhīḥ*, various forms of mudrās were explained under this title. In the present issue, remaining forms of the mudrās, the necessity of mudrās and types of mudrā etc. are mentioned.

*Introduction to the Tradition of the Early Translation of Sūtras and Tantras in Tibet* *89-102*

The traditional study and practice of the tradition of the early translation of Sūtras & Tantras in Tibet is called rÑiṅ ma or the Old Tradition. The unique tradition of three internal Trantras, i. e. the Mahāyogatantra, the Anuyogatantra and the Atiyogatantra are present in this tradition. The Mahāyogatantra is the Stage of Generation. The Anuyogatantra is the Stage of Completion, and the Atiyogatantra is the Mahāsandhiyoga. In the Mahāyogatantra the practitioner realizes all phenomena in the form of the unity of ābhāsa and śūnyatā. In the

Anuyogatantra he realizes the unity of dharmatā and ādijñāna and in the Atiyogatantra, he realizes the phenomena as the primordial svayambhūjñāna. The present issue includes the discussion on the philosophy and practice of the Old Tradition and the three internal Tantras along with the Indian tradition.

*General and Concise Arrangement of Tantras* *103-112*

In the previous issues, a Hindi translation of the text complied by Ācārya Bu-ston, namely, "The Key Opening the Door of the Treasures of Jewels" was given. In the present issue, a Hindi translation of the last part of the same text is given. The main focus is on the gradual development of Kriyā Tantras, Caryā Tantras etc. and the way of preaching those Tantras.

*Dīkṣā : Initiation in Buddhist and Non Buddhist Systems* *113-128*

In the previous issues of *Dhīḥ,* the initiations of Buddhist, Jain, Vaiṣṇava, Śaiva, Śākta, Saura, Gāṇapatya and Upanayana Saṁskāra in Vedic tradition were given. The present issue has a brief explanation of the initiation according to the Islamic tradition. The article discusses various aspects, such as the right to give initiation, the master of initiation, the method of initiation, the duty of disciple and so on.

*Āryavasudhārādhāraṇī Sūtra* *129-147*

In the present issue, a text of the Āryavasudhārādhāraṇī Sūtra is being published. There are a number of manuscripts available in the libraries, in both concise and descriptive forms. The present edition is prepared on the basis of three descriptive manuscripts (one complete ms. and two incomplete mss.), from the Asiatic Society, Kolkata. It is a very important Dhāraṇī. Ample material related to the Vasudhārādhāraṇī, Vasudhārādhāraṇīstotra and Dhāraṇī-sūtra etc. is available in the Buddhist and Jaina manuscripts collections.

•

# རྩོམ་གྱི་ངོ་སྤྲོད་མདོར་བསྡུས།

## བསྟོད་པ་ཁག་གཉིས། ༡ - ༤

དུས་རབས་འདོན་ཐེངས་འདིའི་ནང་འཁོད་པའི་བསྟོད་པ་ཁག་གཉིས་པོ་འདི་དག་ནི། མི་ཐི་ལཱ་མཐོ་སློབ་ཁང་དྷར་བྷཾ་གཱ་ནས་པར་བསྐྲུན་ཞུས་པའི་ཐེག་པ་ཆེན་པོའི་མདོ་ཕྱོགས་བསྡུ་བྱས་པའི་པོད་དང་པོ་ལས་བླངས་པ་ཞིག་ཡིན། དེ་ལས་བླངས་པའི་བཅོམ་ལྡན་འདས་ཀྱི་བསྟོད་པ་འདི་ནི་འཕགས་པ་ཡུལ་འཁོར་སྐྱོང་གིས་ཞུས་པའི་མདོ་ལས་དང་། དེ་བཞིན་གཤེགས་པ་འཇིག་རྟེན་དབང་ཕྱུག་རྒྱལ་པོའི་བསྟོད་པ་ཞེས་པ་འདི་ནི་བདེ་བ་ཅན་གྱི་བཀོད་པ་ཞེས་བྱ་བ་གཞུང་རྒྱས་བསྡུས་གཉིས་ཡོད་པ་ལས་གཞུང་རྒྱས་པ་ལས་བླངས་ནས་འདིར་པར་བསྐྲུན་ཞུས་པ་ཡིན། བསྟོད་པ་འདི་གཉིས་ཀྱི་འགོ་བརྗོད་ནི་ཞུ་སྒྲིག་པའི་ངོས་ནས་བཀོད་པ་ཞིག་ཡིན།

## ཆོས་དཀོན་པའི་དཔེ་དེབ་ཁག་གི་ངོ་སྤྲོད། ༥ - ༡༦

དུས་རབས་འདོན་ཐེངས་འདིར་གཞམ་གསལ་ལྟར་དཔེ་དེབ་བརྒྱད་ཀྱི་ངོ་སྤྲོད་བྱས་ཡོད། དཔེ་དེབ་དེ་དག་ཚང་མའི་རྩ་བའི་མ་དཔེ་རྣམས་ཞིང་གཤེགས་སློབ་དཔོན་ཆེན་པོ་ཛ་གནྣཱ་ཐ་ཨུ་པཱ་དྷྱཱ་ཡ་དང་། སློབ་དཔོན་ཆེན་པོ་ཨར་སི་པཱ་ཎྜེ་ཡ་རྣམ་གཉིས་ཀྱི་དཔེ་དེབ་ཕྱོགས་བསྡུས་ཁག་ལས་བླངས་པ་ཡིན། དེ་དག་ད་ལྟའི་ཆར་བོད་ཀྱི་ཆེས་མཐོའི་གཙུག་ལག་སློབ་ཁང་གི་ཞི་འཚོ་དཔེ་མཛོད་ཁང་དུ་བཞུགས་ཡོད། དཔེ་དེབ་ཁག་གི་འདྲ་བཤུས་ལས་དེ་དག་གི་རྩ་བའི་མ་དཔེའི་མ་ཕྱི་རྣམས་ཀ་ལི་ཀཏྟར་ཡོད་པའི་ཨེ་ཤི་ཡ་ཊིཀ་སོསཱཡ་ཊི་དཔེ་མཛོད་ཁང་ནས་ཡིན་པ་རྟོགས་ཐུབ། གཞུང་དེ་དག་ནི། ༡། འཕགས་པ་སྒྲོ་དྲུག་པ་ཞེས་བྱ་བའི་གཟུངས། ༢། འཕགས་པ་ནོར་གྱི་རྒྱུན་ཞེས་བྱ་བའི་གཟུངས། ༣། འཕགས་མ་གཟའ་རྣམས་ཀྱི་ཡུམ་ཞེས་བྱ་བའི་གཟུངས། ༤། ཡིད་ལ་བྱེད་པའི་འཁོར་ལོ་བཅུ་དྲུག ༥། འཇམ་དཔལ་ཡེ་ཤེས་སེམས་དཔའི་དོན་དམ་པའི་མཚན་ཡང་དག་པར་བརྗོད་པ། ༦། དཔལ་གཏུམ་པོ་ཆེར་འཁྲིས་པའི་སྒྲུབ་ཐབས། ༧། གཏུམ་ཆེན་དྲག་པོའི་མངོན་པར་རྟོགས་པ། ༨། གཟུངས་ཕྱོགས་བསྡུས་བཅས་སོ།།

## ནང་པའི་རྣལ་འབྱོར་རྒྱུད་དུ་གསུངས་པའི་དེ་ཉིད་རྣམས་ཀྱི་འབྲེལ་བའི་རིམ་པ། ༡༧ - ༢༨

ནང་པའི་རྣལ་འབྱོར་ནི་ཐོག་མར་སངས་རྒྱས་བཅོམ་ལྡན་འདས་ཉིད་ལས་བྱུང་བ་ཡིན། འདིའི་དཔེར་མཚོན་མང་དག་ཅིག་ནང་པའི་མདོ་སྡེ་རྣམས་སུ་མཐའ་དུ་ཡོད། ཕྱིས་སློབ་དཔོན་རྣམས་ཀྱིས་རང་རང་གི་འགྲེལ་པའི་ལམ་ནས་མངོན་པར་གསལ་བར་མཛད་ཡོད། ནང་པའི་གྲུབ་ཐོབ་པདྨ་རྡོ་རྗེས་སངས་རྒྱས་གསང་བའི་བརྒྱུད་པ་ལས་དེ་ཁོ་ན་ཉིད་བསྡུས་པའི་རྒྱུད་ཀྱི་འགྲེལ་བཤད་མཛད་པའི་སྐབས་དེ་ཉིད་སོ་བདུན་གྱི་འགྲེལ་བཤད་མཛད་འདུག རྣལ་འབྱོར་རྒྱུད་དུ་དེ་ཉིད་དེ་དག་གི་སྦྱོར་བ་དང་། དེ་དག་དང་འབྲེལ་བའི་སྐོར་གསལ་ཁ་མཛད་འདུག །རྣལ་འབྱོར་རྒྱུད་དུ་ནང་པའི་སྦྱོར་བ་ཡན་ལག་དྲུག་གི་སྐོར་ལ་ཞུགས་སྟོན་ལྷག་པར་མཛད་པར་བཏེན། འདི་ནི་ནང་པ་ལས་གཞན་པའི་རྒྱུད་གཞུང་ལས་ཐ་དད་པ་ཡིན། ཆེད་རྩོམ་འདིའི་ནང་རྣལ་འབྱོར་རྒྱུད་ཀྱི་ལྷ་ཚུལ་ལྟར་གྱི་དེ་ཉིད་སོ་བདུན་ལ་བསྐྱར་ཞིབ་བྱས་པ་དང་སྔགས་བོད་ལུགས་ལྟར་གྱི་དེ་དག་གི་གསལ་བཤད་བྱས་པ་འདིར་བཀོད་ཡོད།

## རྗེ་ཙོང་ཁ་པ་ཆེན་པོས་མཛད་པའི་རང་རྣམ་དང་འབྲེལ་བའི་རྟོགས་བརྗོད་མདུན་ལེགས་མ། ༢༩ - ༣༦

མཁྱེན་རབ་རྣམ་དཔྱོད་ཀྱི་མཐུ་ཕུལ་དུ་བྱུང་བ་གངས་ཅན་མཁས་པའི་གཙུག་རྒྱན་འཇམ་མགོན་ཆོས་ཀྱི་རྒྱལ་པོ་ཙོང་ཁ་པ་ཆེན་པོས་མཛད་པའི་ཟབ་བརྗིད་གྲགས་ཅན་གྱི་རྟོགས་བརྗོད་སྙུ་ཉིད་ཀྱིས་དངོས་སུ་མཛད་པ་འདི་ནི། གང་གི་གསང་བ་གསུམ་གྱི་མཛད་པའི་སྙིང་དོན་མཐའ་དག་གང་དུ་འདུས་པའི་སྡོམ་ཆེན་པོ་ཞིག་སྟེ། དེ་ཡང་འགངས་ཆེ་བའི་དོན་གནད་བཞི་སྐབས་གསུམ་དུ་བསྡུས་ནས་བསྟན་པར་མཛད་ཡོད། དེ་ཡང་དང་པོར་སྐྱེ་སྐུ་ཆེ་སྟོད་ལ་བཀའ་དགོངས་འགྲེལ་གྱི་མདོ་སྔགས་ཀྱི་ཟབ་དོན་མཐའ་དག་ལ་མང་དུ་ཐོས་པ་རྒྱ་ཆེར་བཙལ་ཚུལ་དང་། བར་དུ་གཞུང་ལུགས་ཐམས་ཅད་ཇི་ལྟར་གདམས་པར་ཤར་ཚུལ་དང་། ཐ་མར་ཉིན་མཚན་ཀུན་ཏུ་ཐུགས་ཉམས་སུ་བཞེས་ཚུལ་དང་། དེ་དག་ལ་བརྟེན་ནས་ཚོགས་གཉིས་ཀྱིས་བསྡུས་པའི་དགེ་ཚོགས་ཀྱི་དཔལ་

ཡོན་བསམ་གྱིས་མི་ཁྱབ་པ་གང་བསགས་པ་ཀུན་ཀྱང་རྒྱལ་བའི་བསྟན་པ་རིན་པོ་ཆེ་ཕྱོགས་དུས་ཀུན་ཏུ་དར་ཞིང་རྒྱས་པའི་ཆེད་དུ་བསྔོ་བ་བཅས་གནད་དོན་འདི་བཞིར་འདུས་ཤིང་། དོན་གནད་ཕྱི་མ་གཉིས་སྐབས་ཐ་མའི་ནང་དུ་བསྡུས་ནས་བསྟན་པར་མཛད་ཡོད།

རྟོགས་བརྗོད་ཁྱད་པར་ཅན་འདི་བརྩམས་པའི་དགོས་པ་ནི། དམ་པ་གང་ཉིད་ཀྱིས་བསགས་པའི་དཔག་ཏུ་མེད་པའི་དགེ་ཚོགས་རྣམས་རྒྱ་ཆེར་སྤེལ་ཕྱིར་དང་། གཞན་རྣམ་དཔྱོད་དང་ལྡན་པའི་བསྐལ་བཟང་མང་པོ་ལ་ཡང་དག་པའི་འཇུག་སྒོ་མ་ནོར་བར་ཚུལ་བཞིན་བསྟན་པའི་ཆེད་དུ་ཡིན་ལ། གཞུང་འདི་ལ་བོད་པའི་མཁས་པ་ཕུར་ལྕོག་ངག་དབང་བྱམས་པ་དང་། ཞང་སྟོན་བསྟན་པ་རྒྱ་མཚོ་སོགས་ཀྱིས་བརྩམས་པའི་འགྲེལ་པ་ཡོད། ད་ལམ་འདིར་གཞུང་འདིའི་གལ་གནད་དང་འགྲོ་དོན་ཆེ་བ་སོགས་ལ་དམིགས་ནས་ཧིན་སྐད་ཐོབ་ཕབ་བསྒྱུར་དང་། ཉམས་ཞིབ་ཀྱི་སྒོ་ནས་ངོ་སྤྲོད་མདོར་བསྡུས་དང་སྦྲགས་ཏེ་ཌྷཱིཿདུས་དེབ་ནང་པར་བསྐྲུན་ཞུས་པ་དགེའོ།།

## འབྱུང་པོ་འདུལ་བ་ཞེས་བྱ་བའི་རྒྱུད། ༣༧ - ༤༨

ཌྷཱིཿདུས་དེབ་འདོན་ཐེངས་སྔ་མ་རྣམས་སུ་ལྷ་ཅ་དབུས་བོད་ཀྱི་ཆེས་མཐོའི་གཙུག་ལག་སློབ་ཁང་གི་ཞི་འཚོ་དཔེ་མཛོད་ཁང་ལས་ཐོབ་པའི་ལེགས་སྦྱར་ཙ་བའི་མ་དཔེ་ལ་གཞི་བྱས་པའི་ཐོག་གོང་སློས་གཞུང་གི་ངོ་སྤྲོད་མདོར་བསྡུས་བཀོད་ཟིན་ཅིང་། ད་ལན་འདོན་ཐེངས་འདིར་ལྷ་ནྟ་ཅ་སྣིའི་བཱཙཡ་ཕིཊྚ་དཔེ་བསྐྲུན་ཁང་ནས་པར་བསྐྲུན་ཞུས་པའི་གོང་སློས་གཞུང་དེ་ལ་གཞི་བྱས་ནས་དེའི་ངོ་སྤྲོད་མདོར་བསྡུས་བཀོད་ཡོད། གཞུང་དེ་གཉིས་ཀའི་བརྗོད་བྱ་གཅིག་མཚུངས་ཡིན་རུང་གཞུང་སྔ་མ་དེ་ཚག་མ་ཚུད་པ་ཞིག་ཡོད་པ་དང་། དེར་ལེའུའི་རྫོགས་མཚམས་ཀྱི་མཇུག་བྱང་དགུ་ཡོད་ཀྱང་། ལེའུའི་བར་བར་གྱི་མཇུག་བྱང་རྣམས་རྩིས་ན་ལེའུའི་གྲངས་ཉི་ཤུ་རྩ་གཅིག་ཏུ་གྱུར་ལ། འོན་ཀྱང་འདོན་ཐེངས་འདིར་ལེའུ་བཅུ་དྲུག་གི་ངོ་སྤྲོད་མདོར་བསྡུས་བཀོད་ཡོད།

གཞུང་འདིའི་དམིགས་བསལ་གྱི་ཁྱད་ཆོས་ནི་སྒྲུབ་ཐབས་རེ་རེའི་ནང་བསྒྲུབ་བྱའི་ལྷ་རྣམས་ཀྱི་སྔགས་ཀྱི་སྔགས་བཏུ་ཡང་བསྟན་ཡོད། དེའི་རྗེས་རིམ་པ་བཞིན་དེ་དག་གི་ཕྱག་རྒྱ་རྣམས་དང་།

སྒྲུབ་ཐབས་བཅས་བསྟན་ཡོད། གོང་གསལ་གཞུང་གཉིས་པོའི་ནང་གང་དང་གང་དུ་བྱུད་པར་སྣང་བ་རྣམས་ལེའུ་དེ་དག་སོ་སོའི་ཐད་དུ་གསལ་ཁ་བཀོད་ཡོད། ངོ་སྤྲོད་བཀོད་པའི་ལས་རིམ་འདིར་གཞུང་དེའི་ལེའུ་སྔ་མ་བརྒྱད་ཀྱི་ངོ་སྤྲོད་བྱས་ཡོད།

## ཆོས་དཀོན་པའི་གསུང་རབ་ཁག་གི་རྩ་བའི་མ་དཔེ། ༤༤ - ༧༤

འགོ་བརྗོད་འདིའི་འོག་ནྟཿདུས་དེབ་ཞེ་གསུམ་པའི་ནང་གལ་ཆེ་བའི་གསུང་རབ་ལག་བྲིས་བདུན་ཙུ་དོན་གཅིག་གི་ངོ་སྤྲོད་བཀོད་ཟིན་ཅིང་། ད་ལན་གྱི་འདོན་ཐེངས་འདིར་གོང་བཀོད་ལས་གཞན་པའི་གསུང་རབ་ལག་བྲིས་དྲུག་ཅུ་རེ་གཉིས་ཀྱི་གསལ་ཁ་བཀོད་ཡོད།

## ནང་པའི་རྒྱུད་གཞུང་དུ་གསལ་བའི་ཕྱག་རྒྱའི་རྣམ་པ་ཐ་དད་པའི་ངོ་བོའི་སྐོར། ༧༦ - ༨༨

ནྟཿདུས་དེབ་འདོན་ཐེངས་སྔ་མའི་ནང་འགོ་བརྗོད་འདིའི་འོག་ཕྱག་རྒྱའི་རྣམ་པ་ཐ་དད་པའི་ངོ་བོའི་སྐོར་གསལ་བཤད་བྱས་ཟིན་ཅིང་། འདོན་ཐེངས་འདིར་ཕྱག་རྒྱའི་ངོ་བོ་འཕྲོས་རྣམས་ཀྱི་སྐོར་དང་ཕྱག་རྒྱའི་དགོས་པ་དང་། ཕྱག་རྒྱའི་དབྱེ་བ་ལ་སོགས་ཀྱི་བརྗོད་གཞིའི་ཐོག་ལ་འགྲེལ་བརྗོད་བྱས་པ་བཀོད་ཡོད།

## བོད་དུ་བསྒྱུར་བའི་སྔ་འགྱུར་གྱི་མདོ་རྒྱུད་ཀྱི་ངོ་སྤྲོད། ༨༩ - ༡༠༢

བོད་དུ་སྔ་འགྱུར་ནང་པའི་མདོ་རྒྱུད་ཀྱི་སློབ་གཉེར་དང་། སྒོམ་སྒྲུབ་ཀྱི་བརྒྱུད་པ་ལ་རྙིང་མའམ་རྙིང་མའི་བརྒྱུད་པ་ཞེས་བརྗོད་སྲོལ་ཡོད། བརྒྱུད་པ་འདི་ལ་ནང་རྒྱུད་གསུམ་ཡོད་དེ། རྣལ་འབྱོར་ཆེན་པོའི་རྒྱུད་དང་། རྗེས་སུ་རྣལ་འབྱོར་གྱི་རྒྱུད་དང་། ཤིན་ཏུ་རྣལ་འབྱོར་གྱི་རྒྱུད་ཀྱི་བརྒྱུད་པ་བཅས་བཞུགས། རྣལ་འབྱོར་ཆེན་པོའི་རྒྱུད་ནི་བསྐྱེད་རིམ་དང་། རྗེས་སུ་རྣལ་འབྱོར་གྱི་རྒྱུད་ནི་རྫོགས་རིམ་དང་། ཤིན་ཏུ་རྣལ་འབྱོར་གྱི་རྒྱུད་ནི་མཆམས་སྦྱོར་ཆེན་པོའི་རྣལ་འབྱོར་ཡིན། རྣལ་འབྱོར་ཆེན་པོའི་རྒྱུད་ཀྱི་ནང་སྒྲུབ་པ་པོ་ཚོས་ཐམས་ཅད་རྟོགས་ཤིང་སྣང་བ་དང་སྟོང་ཉིད་ཐ་མི་དད་པའི་སྐོར་དང་།

རྗེས་སུ་རྣལ་འབྱོར་གྱི་རྒྱུད་དུ་ཆོས་ཉིད་དང་གདོད་མའི་ཡེ་ཤེས་ཐ་མི་དད་པ་དང་། ཤིན་ཏུ་རྣལ་འབྱོར་ནང་གདོད་མ་ནས་རང་འབྱུང་ཡེ་ཤེས་ཀྱི་ཚུལ་དུ་བྱེད་པ་ཡིན། ཆེད་རྩོམ་འདིའི་ནང་སྙིང་རྒྱུད་ཀྱི་ལྟ་བ་དང་སྒྲུབ་ཐབས་ཀྱི་བརྒྱུད་པ་རྣམས་ཀྱི་སྐོར་ལ་གསལ་བཤད་དང་། ནང་རྒྱུད་ཀྱི་རྒྱུད་དེ་གསུམ་པོ་རྒྱ་གར་གྱི་བརྒྱུད་པ་དང་བཅས་ཀྱི་གསལ་བཤད་བྱས་ནས་བཀོད་ཡོད།

### བུ་སྟོན་རིན་པོ་ཆེས་མཛད་པའི་རྒྱུད་སྡེ་སྤྱིའི་རྣམ་གཞག་བསྡུས་པ། ༡༠༣ - ༡༡༢

ཧྲཱིཿདུས་དེབ་འདོན་ཐེངས་སྔ་མ་རྣམས་སུ་འགོ་བརྗོད་འདིའི་འོག་བོད་ཀྱི་མཁས་དབང་བུ་སྟོན་རིན་པོ་ཆེས་མཛད་པའི་རྒྱུད་སྡེ་སྤྱིའི་རྣམ་གཞག་བསྡུས་པ་རྒྱུད་སྡེ་རིན་པོ་ཆེའི་གཏེར་སྒོ་འབྱེད་པའི་ལྡེ་མིག་ཅེས་པའི་གཞུང་འདི་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་གྱི་ལས་རིམ་རྒྱུན་ཆགས་སུ་འབྱུང་བའི་འདོན་ཐེངས་ཐ་མ་འདིའི་ནང་བྱ་རྒྱུད་དང་། སྤྱོད་རྒྱུད་ལ་སོགས་པའི་བྱུང་ཚུལ་དང་། རྒྱུད་ཀྱི་བཤད་ཐབས་རྒྱས་པར་བསྟན་པ་རྣམས་ཧིན་སྐད་ཐོག་ཕབ་བསྒྱུར་བགྱིས་ཏེ་བཀོད་ཡོད། འདོན་ཐེངས་འདི་ནི་གོང་སློས་ཀྱི་གཞུང་གི་མཇུག་སྡོམ་ཡིན་པས། གཞུང་འདིའི་ཕབ་བསྒྱུར་གྱི་ལས་རིམ་རེ་ཞིག་གྲུབ་པ་ཡིན།

### ནང་ཆོས་དང་ཆོས་ལུགས་གཞན་རྣམས་སུ་བསྟན་པའི་སྡོམ་པའི་ངོ་བོ། ༡༡༣-༡༢༨

ཧྲཱིཿདུས་དེབ་འདོན་ཐེངས་སྔ་མ་རྣམས་སུ་ནང་པ་དང་། གཅེར་བུ་པ་དང་། རིག་བྱེད་པའི་སྡོམ་པའི་ནང་ཚན་ཉེ་བར་འདྲེན་པའི་ལས་ཏེ་ཨུཔནཡནསཾསྐཱར་དང་། ཁྲབ་འཇུག་པ། ཞི་བ་པ། ནུས་མ་པ། སོར་དང་། ཚོགས་བདག་བཅས་ཀྱི་སྡོམ་པ་རྣམས་རིམ་པས་བསྟན་ཟིན། འདོན་ཐེངས་འདིར་ཁ་ཆེ་སྟེ་ཨིས་ལཱམ་ཆོས་ལུགས་ཀྱི་སྡོམ་པའི་ནང་ཚན་དེའི་ཚོ་ག་དང་། དེའི་བདག་དབང་། སྡོམ་པའི་སློབ་དཔོན་དང་སློབ་མའི་ལས་འགན་རྣམས་ཀྱི་ངོ་སྤྲོད་མདོར་བསྡུས་བཀོད་ཡོད།

## འཕགས་པ་ནོར་གྱི་རྒྱུན་ཞེས་བྱ་བའི་གཟུངས། ༡༢༦ - ༡༧༥

འདོན་ཐེངས་འདིར་འཕགས་པ་ནོར་གྱི་རྒྱུན་ཞེས་བྱ་བའི་གཟུངས་ཀྱི་མདོ་འདི་པར་བསྐྲུན་ཞུས་ཡོད། འཕགས་པ་ནོར་གྱི་རྒྱུན་ཞེས་བྱ་བའི་གཟུངས་ཀྱི་མདོའི་རྩ་བའི་མ་དཔེ་མང་པོ་ཡིག་རྙིང་དགེ་མཛོད་ཁང་རྣམས་སུ་ཐོབ་བཞིན་ཡོད་པར་མ་ཟད། འདི་ལའང་གཞུང་རྒྱས་བསྡུས་གཉིས་ཡོད། དེ་བཞིན་ཞུས་བསྒྲིགས་བགྱིས་པའི་གཞུང་འདི་ཀལི་ཀཏྟའི་ཨེ་ཤི་ཡཱ་ཊིཀ་སོ་སཱཡ་ཊི་དཔེ་མཛོད་ཁང་ནས་ཐོབ་པའི་པར་མ་ཆ་ཚང་བ་གཅིག་དང་། ཆ་མ་ཚང་གཉིས་བཅས་རྩ་བའི་མ་དཔེའི་པར་མ་གསུམ་ཡོད་པ་ལ་གཞི་བྱས་པའི་ཐོག་ནས་ཞུས་བསྒྲིགས་བྱས་ཤིང་། འདི་ནི་གཟུངས་ཀྱི་མདོ་གལ་ཆེན་ཞིག་ཡིན། ནང་པ་དང་གཅེར་བུ་པའི་རྩ་བའི་མ་དཔེའི་དཔེ་མཛོད་ཁང་རྣམས་སུ་ནོར་གྱི་རྒྱུན་ཞེས་བྱ་བའི་གཟུངས་དང་། ནོར་གྱི་རྒྱུན་གྱི་བསྟོད་པ་དང་། གཟུངས་ཀྱི་མདོ་ལ་སོགས་པ་གཟུངས་ཀྱི་གཞུང་མང་པོའི་བྱུང་བ་ཐོབ་ཀྱི་ཡོད།

•••